# विषयसूचिका



★

परपीडनपरायणतागुरुकौशलभाजो हे !
रिपुपाकिस्थानमनःपरिसान्त्वननिरता हे !

रष्यीयाः ! हे रष्यीयाः !

क्षीरमुत्तमं पातुं महाहिगणेभ्यो वितरथ,
मृत्तैलेन विदीप्तं हुताशनं शीतलयथ,
ज्वरितं परितप्ततनु स्नपयथ हे स्वास्थ्यार्थम्
यूकानिस्सरणकृते लिखथ शिरसि महोल्क्या ॥ ॥ पर ॥

उन्मत्तकरे दत्ता शिला क्षिप्येत क्व वा तेन ?
को वा जानीते तद्दातरि वा स्वशिरसि वा,
चीनामैत्रीमहितं पाकिस्थानं किं स्यात् तत्प्रतिरोधि,
भारतं पीडयेदनारतं रष्यां वा समये समुपस्थिते ॥ पर ॥

मित्रद्रोहे पातकं किं न पश्यथ ? किं न पश्यथ ?
कन्योर्दाहानन्तरं खलु तत् पत्रग्रहणं भवेत्,
अमेरिकायै वाग्दानं कथं निर्व्यूढं तेन गोमायुना
किं परोक्षं भवतां ? किमिष्टमनिष्टं भवताम् ॥ ॥ पर ॥

## इतो भ्रष्टः ततो भ्रष्टः

भारतदेशस्य स्वातंत्र्यं समुपगतं नवेति अद्यापि संशय एव वर्तते बहूनां। नायकम्मन्याः स्वकीयं बुद्धिवैभवमनाश्रित्य परोपदिष्टसूत्राणि रटन्ति आचरन्ति च तदनुगुणम्। अस्वातन्त्र्यकाले एकस्यैव आंग्लदेशस्य अधीनता आसीत् अस्माकम्। इदानीं तु बहुप्रमुखराज्यानां प्रोत्साहनैः तत्कोपभीतैश्च अस्माभिः असिधाराव्रतमाचरितव्यं वर्तते। अमेरिकया सह संभाषणे रष्या कुप्यति, रष्यया सह मैत्र्यां अमेरिका असूयति। उभयमैत्रीकांक्षिभिरस्माभिः उभयवैमत्यमेव संपादितं। उभे अपि राष्ट्रे अस्मन्नाशाय पाकिस्थानं प्रत्यक्षं परोक्षं वा चोदयतः, वाचि मधु हृदये विषम् धरतः। अस्मत्साहाय्यं प्रकाश्य अस्मच्छत्रुसाहाय्यं च कुरतः। काश्मीरप्रश्नं च न शामयतः, अपि तु प्रशमसमये इन्धनमर्पयित्वा वैराग्निं संरक्षतः। अस्माकमियम् दीना अवस्था आपतिता को वा शत्रुः को वा मित्रमिति न विविच्यते। प्रत्यक्षशत्रुतायाः हितशत्रुत्वं प्रमादकरम् भवति। अपायं आशंक्य यावच्छ्वसिति जागरूको वर्तेत तदा मनुजः। एतादृशं सौहृदं वञ्चनामात्रमेव।

ताष्कण्टसन्धिसन्धान एव रष्यायाः सौजन्यं अशंकन्त। श्रीमतः शास्त्रिणः आकस्मिकमरणमपि तत्र महाक्लेशकरमभूत् भारतीयानाम्। परन्तु अनुनयवाक्यानां श्रवणेन भारतीयं मनः प्रशान्तमासीत्।

एवं स्थिते अद्य तावत् पाकिस्थानस्य कृते बहुयुद्धसंभारसमर्पणम्, भारतदेशाक्षेपेपि स्वसङ्कल्पादविचलनं, नखैः प्रखण्ड्य शयनगीतिकालपनमिव भारतदेशव्यथानिवारकशुष्कप्रसंगश्च हन्त महतीमापदं सूचयति।

अपि च अपमपरो प्रबलराज्यानां दुर्व्यूहः यत् अणुस्फोटहीनदेशानां तद्राहित्यं शाश्वततया प्रतिज्ञापनम्, तेषां स्फोटानां सम्पादनं संरक्षणं संधुक्षणं च आत्ममात्रायत्तीकरणं, तदस्मदुभयशत्रौ तैः विस्फोटैः वर्धमानेपि अस्माकं हस्तबन्धाय महोद्योगश्च। अणुविज्ञानस्यैव स्वात्मैकमात्रायत्तत्वं कांक्षन्ते प्रबलराज्यानि। अणु-विज्ञानम् न स्फोटनिर्माणाय अपि तु परिश्रमनिर्वाहायैव उपयोक्ष्याम इति अस्मदीय वचनं ते न विश्वसन्ति। अणुयुद्धे प्राप्ते भवन्तं रक्षिष्याम इति तेषां वचनम् विश्वास्यं खलु अस्माभिः? चैनोपद्रवे समुपस्थिते पाकिस्थानोपद्रवे च उपनते किमाचरितमेतैः मित्रजम्बुकैः? अणुयुद्धे हि संप्राप्ते दूरतः सहायसम्पादनं सुतरां दुर्लभम् भविष्यति। न वचोभिः रक्षितुं शक्यः कोऽपि अध्वस्तो देशः। एते किं वा मनसि चरन्ति भारतदेशविषये चैनाविषये च नैव ज्ञायते। चैनानिरोधनं उभय-राज्ययोरिष्टतरं प्रतीयते एकस्य सिद्धांतविरोधित्वात् अपरस्य च सिद्धांतविभेदात। तन्निरोधाभावे स्वस्यापि ग्रसनम् संभाव्यते उभाभ्यां तदनुरूपमेव उभे अपि अनिष्ट-मपि सन्धिं सम्मान्य प्रवर्तेते कर्तव्येषु। एवं स्थिते चैनानिरोधाय पाकिस्थानमालंबते रष्या इति महदाश्चर्यकरी भवति तन्नीतिः। हते भीष्मे हते द्रोणे कर्णे च विनिपातिते, आशा बलवती राजन् शल्यो जेष्यति पांडवान्" इति वचनं स्मृति-पथमारोपयति। भारतदेशसहकारेण स्वाभीष्टं साधयितुं महानवकाशो वर्तते। एतद्वि-रुद्धतया एतदाचरणं च विपत्करमेव। पाकिस्थानं च चैनादेशेन बद्धसख्यं प्रथते। तदायुधानां राशयः तत्र वर्तन्ते, तद्योधाश्च पाकिस्थानसैनिकान् युद्धकौशलं शिक्षन्ते। एवं दशायां पाकिस्थानोपच्छन्दनं न केवलं भारताय अपि तु रष्याया अपि नाशायैव भविष्यति।

अस्माकं तु पुनः अमेरिकाया आश्रयणमनिवारित मुपस्थितम् मातृहीनस्य वत्सस्य दशा अस्माकं उपसंपन्ना। स कस्या अपि गोः ऊधसि मुखं निक्षिपेत् क्षीराय, प्राप्नुयात्केवलं पादप्रहारम्।

अतः यावच्छक्ति देशीयपरिकराणां सञ्चयः करणीयः । बहुलधनव्ययेनापि सन्नाहः करणीयः । विलासवस्तूनां परदेशादवतारणं निश्शेषं स्थगयितव्यम् । यदावश्यकं यदात्मनिर्माणेन असाध्यं यत्प्राणरक्षकं यत् विनास्मत्कार्यं न चलति तादृगेव वस्तुजातं आनेयं परदेशात् । यदात्मावसरावशिष्टं यदात्मजनापरिगृहीतम् तदेव समुद्रतार्यं अनुमोदेत । अणुविषये महद्विषये वा परबुद्धिर्विनाशायेति वचनम् अनुसन्धाय स्वानुगुणं सन्नह्येत । अन्तःकलहान् वर्गकलहान् प्रान्तकलहान् एवमादीन् दूरतः उत्सारयेत् ।

भारतमेकं, भारतीयाश्चैकमताः, भारतरक्षणमेव भारतप्रजातन्त्रस्य ध्येयं इति सुधीरं निरूपणीयम् ।

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

## कीलकदक्षिणायनपरीक्षासारिणी

## SEPTEMBER EXAMINATIONS 1968

| परीक्षाः | 7—9—68 | | 8—9—68 | | 9-9-68 |
|---|---|---|---|---|---|
| | प्रातः | सायम् | प्रातः | सायम् | प्रातः |
| परिचयः | — | — | परिचयः | — | — |
| अभिज्ञः | — | — | प्रथमपत्रम् | द्वितीयपत्रम् | — |
| विचक्षणः | — | प्रथमपत्रम् | द्वितीयपत्रम् | तृतीयपत्रम् | — |
| समर्थः | प्रथमखण्डे प्रथमपत्रम् | प्रथमखण्डे द्वितीयपत्रम् | द्वितीयखण्डे प्रथमपत्रम् | द्वितीयखण्डे द्वितीयपत्रम् | — |
| कोविदः | प्रथमखण्डः | द्वितीय खण्डः | तृतीयखण्डः | चतुर्थखण्डः | पञ्चमखण्डः |

चित्तूरु,
15—8—68.

कीο श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# राजाजी कथा ३८

## गुरूपदेशः

★

लेखकः --- आ० वादराजः

कस्मिंश्चिद्ग्रामे परमैकान्ती स्वामी कश्चिदावसति स्म। तस्य स्वामिनः अन्तिके बहवोऽन्तेवासिनः आसन्। तेभ्यः शिष्येभ्यः स्वामी धर्मानुपदिशन् आमुष्मिकचिन्तनया सुखं कालं क्षिपति स्म।

★ ★ ★

स्वामिनः अभिमतानां शिष्याणां मध्ये महाबधिरः कश्चिदास्त। गुरूपदेशान् श्रोतुकामोऽपि स वराकः श्रोतुमपारयन्नास्त। किंकर्तव्यतामूढः स कदाचित् स्वामिने निवेदयामास "अमूल्यानि तत्रभवतां उपदेशवाक्यानि न मे श्रुतिपथमायान्ति" इति। अत्रान्तरे न जाने स पुनः किमप्यचिन्तयत्, अवोचच्चैवं – "यथाकथंचिदस्तु नाम कामं; तत्रभवद्भिः यथाप्रकारं शिष्येभ्यः उपदेशः क्रियमाण एव आस्ताम्। मया पुनः तदेकध्यानेन तत्रभवतां मुखपद्मं विलोकयता उपनिषद् स्थीयते; तदेवालम् मम" इति।

वत्स! तव भाषितानि मम अतीव सन्तोषप्रदानि। सौजन्यसंशोभितम् तव हृदयम् प्रशंसनीयम्। चिन्ता माऽस्तु। तव हेतोः प्रतिदिनं एकैकम् प्रवचनम् तालपत्रे विलिख्य ददामि तावत्, येन त्वमपि आत्मविकासं प्राप्तुं शक्नुयाः यथा सहाध्यायाः – इति स्वामी तं बधिरशिष्यम् आश्वासयामास। आचरित चैवमेव।

सोऽपि बधिरः गुरुणा अनुदिनं प्रदत्तं दत्तं दीयमानं च तत्सर्वमपि तालपत्रं अहन्यहनि पठन् मनसि कुर्वन् तत्तदर्थान्, परमार्थांश्च परमभक्त्या,

परमश्रद्धया, यथाकालम् निदिध्यासन् , सर्वाण्यपि तानि तालपत्राणि सुरक्षितानि कुर्वन्नास्त ।

★ ★ ★

एवं त्रिचतुरा वत्सरा व्यतीताः । स्वामिनः परमपदं प्राप्ताः । शिष्यस्तु निधिनिक्षेपवत् सुरक्षितानि तानि तत्त्व-बोधकतालपत्राणि सर्वाण्यपि तानि उद्धृत्य कालदोषात संरक्ष्य प्रचारार्थं गुरूपदेशानां पुस्तकरूपम् सम्पादयितुमुद्युक्तः । तस्यानेन महता प्रयत्नेन अन्ये शिष्या मत्सरग्रस्ता बभूवुः । तस्य प्रचारकार्यक्रमं निरोद्धुमेव ते सर्वे संभूय सन्नद्धाः । तेषामय माक्षेपः – अस्माकं सर्वेषामपि समष्टि सर्वस्वभूतानां अस्मद्गुरोः उपदेशवाक्यानां प्रचारं प्रकाशनं च कथमयमेकाकी कर्तुमर्हति ? – इति । न चैतावता विरतास्ते, न्यायविचारणार्थं राज्ञे निवेदयामासुश्च । बहुजनवचनस्यैव हि आदरो लोके दृश्यते ; राजाऽपि समनन्तरमेव पुस्तकप्रकाशनं न्यषेधत ।

★ ★ ★

उपदेशवाक्यानां पत्राणि गुरुणा ममैव दत्तानि । सा च पत्र-संपुटी मत्सकाश एवाऽस्ति । अतस्तन्मदीय स्वम् । कथमपि तन्न मया दीयते – इति बधिरशिष्यस्य भगीरथप्रयत्नः ।

★ ★ ★

ग्रामो द्विधाभूतः ।

★ ★ ★

अनेन द्वैधीभावेन रत्नोपमानि अमूल्यानि उपदेशवाक्यानि भविष्यत्काले भाविन्याश्च सन्ततेः अत्यन्तमुपयुक्तानि वृथा भवेयुरिति निराशां प्रदर्शयामासुः केचित ।

अन्येषां तु अयं वादः – "समष्टिसर्वस्वभूतानां गुरूपदेशानां प्रकाशनाधिकारः कथमस्यैकस्यैव शिष्यस्य स्यात ? स्याच्चेत समेषां शिष्याणां संभूयाधिकारः स्या"दिति ।

मम बधिरत्वात् ननु, मदर्थमेव हि एतानि उपदेशवाक्यानि तालपत्रगतानि अद्योपलब्धानि । अतः प्रकाशनस्वाम्यं मदीयमेव इति बधिरशिष्यस्य प्रतिवादः ।

★ ★ ★

एवं द्वौ पक्ष-प्रतिपक्षौ वाद-प्रतिवादौ च प्रस्थितौ । केचित बधिरशिष्यस्य वादं न्याय्यं मेनिरे, अन्ये केचित सर्वशिष्यवादं । बधिरशिष्यस्य स्वाम्यवादिनां सर्वशिष्यस्वाम्यवादिनां च महान् संघर्षः समजनि । व्यक्तिस्वाम्यं वा आहोस्वित समष्टिस्वाम्यम् वा गुरूपदेशवाक्यप्रकाशने इति महान् विवादः । यावत् एतेषां वादप्रतिवादानां अवसानसमयः प्राप्तः तावदेव तत तालग्रन्थजातं क्रिमिकीटानां आहुतिरासीत ।

★ ★ ★

तदुपरि तेषां विवादोऽप्यवसितः ।

★ ★ ★

गच्छति काले ग्रामीणाः स्वामिनम् तस्य उपदेशवाक्यानि च व्यस्मार्षुः ।

★ ★ ★

उपदेशो हि मूर्खाणां विवादायैव केवलम् ।
संप्रदायः प्रवर्तेत सत्पात्रं तल्लभते चेत ॥

# गैर्वाणी प्रशंसा

ले० निर्मल रघुनाथशर्मा

★

यस्यां सन्ति कथाश्च नीतिपरका: गाथा: पुराणादिका:
सन्त्यन्यानि सुभाषितानि महतां तोषप्रदान्यन्वहं
दोषादोष विचारणे विजायते सम्पादकीयं महत्
तत्पत्रं भुवि भावुका: सुमुदिता: गृह्णन्तु भो भारते ॥

गैर्वाणी सुरभारतीपरिचयं विद्यार्थिनां पत्रिका
यच्छन्ती खलु विद्यते सुविषयै: रम्यैस्सदा संयुता ।
गीतार्थप्रतिपादनं च कुरुते स्तोत्रैरनेकैर्युता
संग्राह्या विबुधैर्मुदा च सुरवाक्यसंसेवकै रसर्वदा ॥

# श्रीरामचन्द्रभावनाविंशतिः
## (अथवा)
## तं रामचन्द्रमनिशं हृदि भावयामि

व्याकरणविद्याप्रवीणः कन्दाळ वेङ्कटरामकृष्णमाचार्यः

यश्श्रीपतिः परमकारुणिकस्सदा यः
चक्रासिशङ्खधनुरादिमहायुधो यः ।
यो नागराजशयनः पुरुषोत्तमश्च
तं रामचन्द्रमनिशं हृदि भावयामि ॥

यश्चैत्रशुद्धनवमीतिथिमिन्दुलग्नम
चादित्यमृक्षमकरोज्जननेन पूतम् ।
जातो ग्रहेषु तपनादिषु चोच्चगेषु ॥ तं रामचन्द्र ॥

रम्याक्षरैःप्रणिहितोज्वलनामधेयः
योगीन्द्रबृन्दसुखदश्च परात्परो यः ।
यस्सर्वराक्षसगणप्रधनैकवीरः ॥ तं रामचन्द्र ॥

पुत्रेष्टिजातसुभगो रविवंशगोप्ता
यश्श्रीकरो दशरथस्य हितप्रदो यः ।
यः कौशिकादधिगतप्रमुखास्त्रवेदः ॥ तं रामचन्द्र ॥

यस्संजघान विपिने तनयां सुकेतोः
यश्चानुजेन सहितः खरदूषणादीन् ।
रक्षोगणं च विनिहत्य ररक्ष यज्ञम् ॥ तं रामचन्द्र ॥

यो भर्तृशापमभिगम्य शिलात्वमाप्तां
धन्यां चकार मुनिगौतमधर्मपत्नीम् ।
यः कौशिकेन सहितो मिथिलां विवेश ॥ तं रामचन्द्र ॥

यश्शैवकार्मुकमथ प्रबभञ्ज तस्याम्
सीरोत्थितां जनकराजसुतां सुतन्वीम् ।
सीताभिधां सुचरितां विधिनोपयेमे ॥ तं रामचन्द्र ॥

यो जामदग्न्यमकरोद्विजिताखिलज्यम
ज्यासंविधानविधिना हि शिलीमुखस्य ।
निर्वाणमात्ररहितम् चिरजीविनम् च ॥ तं रामचन्द्र ॥

यः केकयेन्द्रदुहितुस्स्वविवासनाख्यम
श्रुत्वाभिलाषमथ काननमन्वगच्छत ।
सौमित्रिणा जनकनन्दनया च युक्तः ॥ तं रामचन्द्र ॥

गंगां ततार गुहनामकनाविकस्य
साहाय्यसम्पदमवाप्य ददंश्च मोक्षम् ।
यश्चोटजे न्यवसदेव हि चित्रकूटे ॥ तं रामचन्द्र ॥

यः प्रार्थितोऽपि भरतेन पुरं प्रवेष्टुम्
नांगीचकार जनके दृढभक्तियुक्तः ।
पादूद्वयं समभिषिक्तमभूच्च यस्य ॥ तं रामचन्द्र ॥

भुक्तावशिष्टफलमप्यतिभक्तिपूत-
मास्वाद्य यश्च शबरीं हि चकार पूतां ।
हत्वा कबन्धमथ मोक्षमदाच्च तस्मै ॥ तं रामचन्द्र ॥

अन्वेषयन् सुचरितामथ ऋष्यमूकं
संप्राप्य सूर्यतनयेन चकार सख्यं ।
यो वायुसूनुसहयोगमवाप्य धीरः ॥ तं रामचन्द्र ॥

यश्चैकबाणनिहतान्हि चकार सप्त
सालांश्च वालिनमथाभिषेच भक्तम् ।
सुग्रीवमर्यमसुतं कपिराजधान्याम् ॥ तं रामचन्द्र ॥

यश्चांजनेयकथितां हि चकार सीता-
वार्तां विमृश्य निधनाय हि रावणस्य ।
सौमित्रिणा कपिबलेन समेत्य यात्राम् ॥ तं रामचन्द्र ॥

यो वारधिं जलनिधेश्च बधान दैत्यम्
धर्मज्ञमाश्रितमपाच्च विभीषणाख्यम् ।
लङ्कां प्रविश्य विजघान च रावणं यः ॥ ॥ तं रामचन्द्र ॥

तां पावकेन परिपूतनिजांगलक्ष्मीं
सीतामुपेत्य सहितो निजसोदरेण ।
यः पुष्पकं समधिरुह्य गतो ह्ययोध्यां ॥ तं रामचन्द्र ॥

सिंहासनं समधिरुह्य प्रजाश्च सम्यक्
सम्पाल्य कीर्तिमतुलां पुनराप्तवान्यः ।
पुत्रद्वयेन सुगुणैरनुजैश्च युक्तः ॥ तं रामचन्द्र ॥

वातात्मजः कपिवरश्च विलंघिताब्धिः
सीतागवेषकवरो ह्यनघोऽतिसत्वः ।
भक्ताग्रगण्य इति यस्य प्रथामवाप ॥ तं रामचन्द्र ॥

वल्मीकजातमुनिपुंगववाग्वधूट्याः
गोस्वामिनश्च वचसां सुयशस्करो यः ।
यश्चेप्सितार्थसुखदो हसतीसमेतः ॥ तं रामचन्द्र ॥

फलश्रुतिः — इत्थं श्रीरामचन्द्रस्य भावने यस्तदा पठेत ।
सर्वैश्वर्यमवाप्नोति तद्विष्णोः परमं पदम् ॥

लघुकथा - ९

# तस्माद्दानं परमं वदन्ति

**पैर्त्तवाडि० महाकवि० ब० रामानुजाचार्यः**

कदाचित् देवाः दानवाः मानवाश्च विश्वसृष्टिकर्तरि चतुर्मुखे ब्रह्मणि मन्त्रस्वीकारार्थं सत्यलोकं जग्मुः । तदा —

ब्रह्मा – (स्वपत्नीं भारतीं वीक्ष्य) देवि ! अद्यवास्मत्सभायां नारद-तुंबुरु-हहाहू-हूहादीनां गाननर्तनादयः किंचित विरताः । (पुरो वीक्ष्य) कथम् इत एव आगच्छन्ति सम्मिळिताः देव-दानव-मानवाः ।

(प्रविश्य देवादयः सरस्वतीसमेतं स्रष्टारं प्रणमन्ति ।

ब्रह्मा – आयुष्मन्तः सुखिनो भवत । किमर्थं यूयं सम्मिलिताः समागच्छथ । इत आस्यध्वम् ।

सर्वे – (उपविश्य) अस्माकं त्रयाणामपि उज्जीवनार्थं समं मन्त्रं एकं उपदिशन्तु भवन्तः ।

ब्रह्मा – (तथेति त्रयाणामपि " द " इति एकाक्षरं मन्त्रमुपदिश्य) एतत्परिशीलनेन कृतार्थाः भवत ।

सर्वे – (प्रणम्य प्रतिनिवृत्ताः । किंचित्परिक्रम्य नारदं दृष्ट्वा) एतन्मन्त्रतात्पर्यं विवृणोतु भवान् इत्यपृच्छन् ।

नारदः - (देवान् वीक्ष्य) यूयं सदाऽपि भोगनिरताः । युष्माभिः इन्द्रियदमनं कर्तव्यम् । (दानवान् वीक्ष्य) यूयं क्रूरचित्ताः । युष्माभिः दया करणीया। (मानवान् वीक्ष्य) युष्माभिः अवश्यं दानं करणीयम् । इति व्यवृणोत् ।

सर्वे – सादरं श्रुत्वा प्रणम्य तथेति निष्क्रान्ताः ।

"तस्माद्दानं परमं वदन्ति" इत्युक्तत्वात अस्माभिः अवश्यं यथाशक्तिः दानम् करणीयम् ।

# कोविदपरीक्षा अनुमोदिता
## (आन्ध्रसर्वकारेण)

एषा संस्कृतभाषाप्रचारिणी सभा २३ वत्सरेभ्यः संस्कृतप्रचाराय निर्विरामं प्रयतते। एतन्निरुह्यमाणाः परीक्षाः भारते परितः प्रसरन्ति। उपाधिपत्रवन्तश्च बहवो वर्तन्ते। अपि तु प्रभुतायाः अनुमोदनविरहे परीक्षाभ्यर्थिनां निरुत्साह इवान्वभूयत। किमेताभिः परीक्षाभिस्साध्यम्? इति तेषां प्रश्नस्य आसीदस्मदुत्तरं प्रभुत्वानुमोदाय प्रयत्यते अस्माभिरिति। बहुवर्षपर्यन्तमस्यैवोत्तरस्य श्रवणेन च उद्विग्ना एव ते अभवन्। तथापि नान्यदुत्तरम् दातुं वयं नालम्। वस्तुतस्तु अस्मद्विज्ञापनानि च भारतसर्वकाराय आंध्रसर्वकाराय परिसरविश्वविद्यालयेभ्यश्च प्रदीयन्ते, तत्तत्प्रमुखाश्च प्रत्यक्षदर्शनभाषणादिना प्रार्थ्यन्ते एव च। तथापि बहवो विघ्नाः बहूनि संकटानि तिरस्काराश्च पदेपदे अन्वभूयन्त। एतेन बहुवारं निरुत्साहो निराशा च अस्मानाक्रामति स्म। सहायदानपटव एव स्वावलंबम् नाददन्। तथापि सभायाः आत्मशक्त्या संस्कृतभाषायाः आत्मसारेण आंध्रसर्वकारः स्वानुमोदं प्रकटीचकार।

एतत्सभानिर्वाह्यमाणा कोविदपरीक्षा श्रीवेंकटेश्वरविश्वविद्यालयीय शिरोमणिपरीक्षायाः पूर्वभागेन (Prelimenary) समा, आंध्रविश्वविद्यालयीयविद्याप्रवीणपरीक्षायाः पूर्वभागेन (Prelimenery) समा, उस्मानियाविश्वविद्यालयीय Dip. O. L. (with Sanskrit Part II & III) इत्युपाधिना च समा आघोषिता इति भृशं संतुष्यामः। क्लेशः फलेन हि पुनर्नवतां विधत्ते।

एतद्विषयकः प्रभुत्वादेशः यथातथं 16 पुटात् प्रकाश्यते। कोविदोपाधिधारिणश्च यथावकाशं पदवीं आर्जयित्वा संस्कृतसेवां नितरां कुर्वन्तः धन्या भवन्तु।

# GOVERNMENT OF ANDHRA PRADESH

## ABSTRACT :

Sanskrit – Kovida Examination conducted by the Sanskrita Bhasha Pracharini Sabha, Chittoor – Recognition of the Examination for purposes of recruitment to the posts of Pandits in Schools-Orders Issued.

## EDUCATION DEPARTMENT:

G. O. Ms. No. 1349 Edn., Dated, the 7th June, 1968

Read the following :

1. G. O. Ms. No. 2896, Edn., dated 8-11-1965.
2. From the Secretary, S. B. P. Sabha, Chittoor, Lr. No. 586 dt. 9-8-66, and the letter dt. 22-5-1968.
3. From the Director of Public Instruction, Lr. No. 487/- H 3/66, dated 17-10-1966.
4. From the A. P. P. S. C., Hyderabad Lr. No. 3550/ B/ 66, dt. 29-12-67 addressed to the D. P. I.
5. From the Director of Public Instruction, Lr. Rc. No. 189/ (f3)-s1/67, dated 12-2-1968.
6. From the Director of Public Instruction, Lr. Rc. No. 189/(f3)-s1/67 dated 24-4-1968.
7. From the Director of Public Instruction, Lr. Rc. No. 189/(f3)-s1 /67, dated 27-5-1968.

## ORDER:

In the ciscumstances reported by the Director of Public Instruction in his letters read above, Governmet hereby accord recognition,in consultation with the Andhra Pradesh Public Service Commission, to the Kovida Examination conducted by the Samskrita Bhasha Pracharini Sabha, Chittoor as equivalent to the Vidyapraveena (Preliminary) Examination of the Andhra University, Siromani (Preliminary) Examination of the S. V. University and also to the Dip. O. L (with Sanskrit under part II and III) of the Osmania University for purposes of recruitment fo the posts of Sanskrit Pandits in the Various schools in the State.

(2) The recognition accorded in para 1 above is subject to the following conditions:-

(i) that the Samskrita Shasha Pracharini Sabha, Chittoor should allow the officers of the Education Depart ment to scrutinise the Examinations being conducted by it; and

(ii) that the Examining body of the Sabha should be associated with a nominee of the Director of Public Instruction

BY ORDER AND IN THE NAME OF THE GOVERNOR OF ANDHRA PRADESH

S. R. RAMAMURTHY,
Secretary to Government.

# अधुना गीताविज्ञानं विद्यार्थिना मुपयोगि

"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" — इयं गीतासूक्तिः प्रसिद्धा ज्ञायत एव सर्वैरपि। तत्र नीतिशास्त्रकोविदैरुक्तम् — आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणां। ज्ञानं हि तेषामधिको विशेषः ज्ञानेन हीनाः पशुभिः समानाः ॥ इति। एतेन ज्ञायते प्रत्येकव्यक्त्याऽपि ज्ञानं सम्पादनीयमिति। तत ज्ञानम् कथम् सम्पादयेदिति प्रश्नं भगवद्गीता प्रत्युत्तरति "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यंति ते ज्ञानम् ज्ञानिनस्तत्वदर्शिनः ॥" इति। अतः ज्ञानसम्पादनार्थं कश्चिद्गुरुमाश्रयेदिति, सः वन्दनेनैव ज्ञानम् प्रसादयतीति, यदि तथा नोपदिशेत् ज्ञानम्, तदा परिप्रश्नः कर्तव्यः किल। परिप्रश्नो नाम पुनः पुनः ज्ञानार्थं गुरुमुद्दिश्य प्रश्नः। यदि तथापि न प्रसीदति गुरुः — सेवा तदा कर्तव्या किल। सेवया विद्यार्थी (ज्ञानार्थी विज्ञानार्थी च) निश्चयम् फलं प्राप्नुते। अत्र विषये संशयो नास्ति। पश्यत! आधुनिककाले पूर्वकालापेक्षया अनेके विज्ञानमार्जयितुम् प्रयतन्ते हि। बहूः परीक्षाः उत्तरन्ति। अनेकाः पदवीः प्राप्नुवन्ति। पूर्वस्मिन् विद्यार्थिनः अल्पाः। गुरवस्तु विरलतराः। पदव्यः पुनः अभावप्रायाः। तदा विद्या चेदावश्यकी सुदूरम् गत्वा अभ्यासः कर्तव्यः आसीत्। गत्वाऽपि न सुखेन पठितुम् शक्यम् - विद्यातुराणां न सुखं न निद्रा तदा। गुरुकुटुम्बेऽन्तर्भूय तत्सेवा कर्तव्या। तदा ज्ञानम् प्राप्यते। यदि विद्यार्थी अत्यन्तमासक्त्या समाश्रयति, सः गुरुम् पृष्ट्वैव ज्ञानम् सम्पादयितुं शक्नोति स्म। कश्चन पुनः तस्मादपि श्रेष्ठः वन्दनेनैव गुरोः परिपूर्णानुग्रहमाप्नुते। एतद्विषये कथाः अनुश्रूयन्ते। अधुना केन ज्ञानम् प्राप्यते? न केनापि। अथवा येन केनचिदपि, सः पूर्वोक्तरीत्या श्रद्धया गुरुम् पृच्छन् प्राप्नुते। अथवा गुरुप्रसादो वा तत्र कारणम् सेवा वा। एवं न मन्तव्यम् - पदवी तस्य ज्ञानम् सूचयति, परीक्षोत्तीर्णता वा तस्य ज्ञानप्रकाशिका इति। यतः पदवीवान् परीक्षाविजयी वा न किमपि स्वं विज्ञानम् प्रकटयितुम् समर्थः दृश्यते। किन्तु कश्चित्परीक्षानुत्तीर्णः, पदवीविहीनः, दृश्यते सकलविषयपरिज्ञानी। अतः परीक्षोत्तीर्णता पदवी च न ज्ञान-

सूचिके । अनेन पुनर्वेद्यते परीक्षोत्तरणसाधिका न विद्या । परन्तु विद्या हि ज्ञानम् विज्ञानम् वा परसाधिका । इमं विषयमेव गीता बोधयति । ज्ञानम् प्राप्य किं कुर्यात - तेन लाभः कः ? अस्माकं पुनः परीक्षोत्तीर्णता, पदवीचावश्यकौ, याभ्यां धनम् सम्पाद्य वयम् सुखम् जीवामः । ज्ञानेन किं धनं लभ्यते ? इति प्रश्नन् गीता प्रतिवदति "अज्ञानेनावृत्तम् ज्ञानम् तेन मुह्यन्ति जन्तवः । ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥ तेषमादित्यवज्ज्ञनं प्रकाशयति तत्परम् । ज्ञानम् लब्ध्वा परां शांतिमचिरेणाधिगच्छति ।." इति । इदमेवाज्ञानम् किल । यत् विद्या परीक्षार्थी सा पदव्यर्थेति । एतदज्ञानम् नाशयितुमेव किल विद्या (ज्ञानं) सम्पादनीया । एतया विद्यया अविद्या नश्यति । अर्थात् विद्यापरीक्षोत्तरणार्था, पदव्यर्थेति अविद्या नश्यतीत्यर्थः । तदा ज्ञानं सूर्यवत विष्वक् व्याप्नोतीत्यर्थः । तेन परं सिध्यति । अत्यन्तं सुखं, यस्मात परं दुःखं नैव विद्यते तत सिध्यति । प्रतिशास्त्रविज्ञानेनापि परमिदं सुखं साधयितुं शक्यते इत्यर्थः । तत्रालस्यं भवति वेतिशङ्का स्यात । न हि भवति । प्रत्युत क्रमेण ज्ञाने सिद्धे परमोत्साहेन कार्याणि कर्तुं नरः प्रवर्तते । नवीन-विषयान् नूतवस्तूनि नूनमाविष्कुरुते । ये अधुना दृश्यन्ते यन्त्राद्याविष्कर्तारः, ते पूर्वं न केवलं परीक्षोत्तरणार्थं, उद्योगमार्थं (पदव्यर्थम् ) धनार्थम् वा विद्याभ्यासं वयमिव अकुर्वन् । अपि तु यः कश्चिन्नूतनपदार्थः आविष्कार्यः इति हि प्रयोज_ नार्थम् । अत एव तेषां यत्नाः सफलाः अभूवन् भवन्ति भविष्यन्ति च । तादृशी सद्भावनैव मानवम् समुन्नतिं नयति । असद्भावः मानवं अधो नयति । असदिति प्रेत्यनो इह इत्युक्तं गीतायाम् । तथाह्यसद्भावः परत्र, अत्र च नाशहेतुरिति प्रतिपादितम् । शङ्का जायते हि – ''ज्ञानार्जने मनः न प्रवर्तते खलु, कथम् तस्मिन मनः स्थिरं स्थापयितुं शक्यते" इति । तस्य समाधानं - यद्यपि मनः दुर्निग्रहं चलं, तथापि अभ्यासेन निग्रहीतुं शक्यते इति । सर्वदा विद्याभ्यासं

कुर्याद्विद्यार्थी । स ज्ञानं लभते । यदि अभ्यासकरणे असमर्थः सन् लोकव्यवहारेषु लग्नो भवति, तदा तस्य ज्ञाने विश्वासो नास्त्येवेत्यर्थः । किंतु विश्वासः सम्पदां मूलम् । विश्वासाभावे जीवितुमेव न समर्थः भवति लोकः । विश्वासेनैव नूनं नरः उन्नतिं प्राप्नोति । गुरुणा 'अ' वर्णे अयम् 'अः' इत्युच्यमानेऽपि न श्रुत्वा अविश्वासेन अयं 'इः' इति चेद्वदेत् सः कदा ज्ञानमाप्नुयात ? अतः विश्वासाभावे (संशये) नरो विनश्यति । तदुक्तम् - नायं लोकोऽस्ति न परो न सुखं संशयात्मनः । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥ इति । संशयं पुनरास्थाय यदि जीवति पश्यतीति लोकोक्तेरयमेवाभिप्रायः । तस्माद् ज्ञाने विश्वस्य नरः पदं पुरः निदध्यात् । अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव - इति भगवानुवाच । अस्याभिप्रायः यथा – भगवान् ज्ञानान्नभिन्नः 'ज्ञानं ज्ञानवतामहम्' इति स्पष्टमुक्तम् । विद्याभ्यासं यदि कर्तुं न शक्नोति जनः तदा ज्ञानकर्मपरेण तेन भवितव्यं किल । जनः ज्ञानकर्मपरः पुस्तकादिपठनेन भवति । ज्ञानकर्म हि पुस्तकादिपठनमेव । अथवा चर्चाः वादान् कथाः उपन्यासान् शृणुयात । शास्त्राणि काव्यानि परिशीलयेत । एवमेव ज्ञातान् विषयान् विलिखेत । यथालिखितम् समाचरेत प्रचारयेत । इतीदं ज्ञानकर्म । मत्कर्मपरमो भव इत्यस्य ज्ञानकर्मपरमो भव इत्यर्थः । एवं ज्ञानकर्मणि श्रद्धा यस्य स्यात सः श्रद्धवान्, स लभते ज्ञानम् । अथेदं ज्ञानसंपादनं कर्म यज्ञः किल । द्रव्ययज्ञास्तपोयज्ञाः योगयज्ञास्तथापरे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ इत्यत्र द्रव्यादियज्ञेभ्यः ज्ञानयज्ञस्यैवोत्कृष्टता प्रतिपादिता भगवता । यथा – श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप । सर्वं कर्माखिलम् पार्थ ज्ञाने परिसमाप्यते ॥ इति । प्रतिकार्यमपि फलं ज्ञानमेव । एतादृशज्ञानसंपादने, ज्ञानसंपादनप्रचारकार्ये विद्यार्थिनः पुरो गच्छेयुः । तेषां श्रद्धां बुद्धिं फलं च तदनुकूलं सर्वं साहाय्यं ददामि इत्युवाच हरिः । अयं विद्यार्थिनां धर्मः । स्वधर्मे निधनं श्रेयः । श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात इति । विद्यार्थिभिः राजकीयव्यवहाराः परकीयव्यवहाराः वा नैव समालोच्याः इति प्रतिपादितं भगवता । एतादृशकल्याणकार्यकृत न दुःफलं प्राप्नोति । न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति । एवं पार्थं निमित्तीकृत्य सर्वविद्यार्थिभ्यः गीताविज्ञानं भगवान् प्रासादयदिति निश्चप्रचं मन्ये । अत एव गीताविज्ञानमिदमेव (अपिचानन्तं तत) विद्यार्थिनामुपयोगि श्रेयस्करम् ।

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ॥

# कोविद्परीक्षायां

उत्तीर्य

संस्कृतपंडितपदवीं निर्वहत !

एतत्समीया कोविद्परीक्षा आंध्रसर्वकारेण उपाध्यायत्व-योग्या अंगीकृता। अतः तत्र उत्तीर्य पंडिता भवत।

इति

ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.

गैर्वाणी

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65

*R. N. 8145/60.* *Postal R. No. H. 493.*

भारतसर्वकारेण पुरस्कृता च

वार्षिकम् रू. ४-००

# प्रहेलिका

विलासिनीं कांचन पट्टिकायां
पटीरपंकैः विरही विलिख्य ।
तस्याः कपोले व्यलिखत् पवर्गम्
तवर्गमोष्ठे चरणे टवर्गम् ॥

भावः – विरहयुक्तः कश्चन पुमान् चन्दनपङ्कैः कस्यांचन पट्टिकायां स्वप्रियां लिखित्वा तस्याः कपोले पवर्गं व्यलिखत् पवर्गस्य ओष्ठस्थानीयत्वात् स्वौष्ठसंयोजनमकरोत्, तस्याः ओष्ठे अधरे तवर्गं व्यलिखत् तवर्गस्य दन्त्यात्वात् दंतक्षतान्यार्पयत, चरणे तस्याः पादयोः टवर्गं व्यलिखत, टवर्गस्य मूर्धन्यत्वात शिरसा प्रणतश्च इति भावः ॥

Published by Sri N. Ramanatha Iyer, B A , B. L , Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C. 1500